for cow protection. Mangal Singh, Gurumukh Singh and Mastan Singh were all hanged in 1871 for their struggle against cow slaughter. Their book 'Chandi-dee-vaar' contains references to sacredness of cow and its protection.

The Buddist work 'Loka neeti' extols the sacredness of cow. Both in Buddhism and Jainism, slaughter of any animal is unacceptable let alone the cow. Many eastern Buddhist countries like Burma, Ceylon etc have banned cow slaughter as part of their religious belief of not harming any living creature.

Scriptures of Jainism preach worshipping of cows as *Kaamadenu* from heavens and killing them is considered as a very great sin. 'Without cow protection human race can not be protected', says Bhagavan Mahaveera. Thus all religions and most of the rulers in India have gone against cow slaughter but still it has been increasing year on year with dwindling population of cattle in this country.

Researchers trace the reason for this alarming loss of national wealth and health to the political wickedness of the British who ruled this country for long. The Hindu majority could impress the Mughal rulers to enforce cow protection orders. The British however discarded it and opened the first slaughter house in 1760 at Calcutta. The House of Commons at London formulated the action plan in 1813 to economically weaken and Christianise this country so as to perpetuate their rule. As directed by their Queen Victoria, the British stifled the traditional Sanskrit education and encouraged non-vegetarians to adapt to beef eating. They opened as many as 300 slaughter houses and killed more than ten crores of cattle. This ultimately led to the historical Sippoy Mutiny in 1857. But still, slaughtering of cattle continued unabatedly.

Even after Independence the situation did not change. Gandhi confessed that he found cow protection more diffi-

cult than getting independence to the country. His own political lieutenant Nehru did not realise the importance of cow protection. He reluctantly closed just one slaughter house under pressure in 1939 and for a while even declared that he would ban cow slaughter on assuming power but unfortunately he never cared to do what he said. A committee headed by Sardar Datar Singh recommended in 1948 a total ban on cow slaughter to be carried out with in 2 years. But Parliament saw no action on this from the Central Government. However some of the state Governments initiated steps to ban cow slaughter. In 1954 when the Parliament was about to adopt a resolution to ban the slaughter after two years of detailed discussions, Nehru thwarted it by threatening to resign. Only in 2005, that too after a historic ruling from the Supreme Court against cow slaughter, the Government woke up to partially ban cow slaughter with riders.

At the time of our independence we had 33 crores of people and 45 crores of cattle. But today we have 110 crores of people with just 11 crores of cattle left with. Instead of 236 slaughter houses in 1947, today we have 36000 of them. We are loosing cattle wealth at the rate of a few lakhs per day.

A silver line in the clouds comes from two Muslim gentlemen namely Maulana Bashir Quadri and Haji Taiyab Qureshi, who are staunch supporters of cow protection. Their stand highlights the fact that banning cow slaughter is not unislamic as portrayed by unscrupulous politicians and others. Maulana Bashir Quadri, who is Alim of Chattisgarh, vouched the whole-hearted support of the Muslims for protecting cows. 'I am feeling a sense of pride by associating myself with this movement and the time is not very far when this country will witness the participation of thousands of Muslims like me joining this movement', he says.

Vouchsafing that not a single cow is slaughtered in any

corner of Chattisgarh in spite of presence of lakhs of Muslims, Maulana Bashir said, 'If cow slaughter is to be banned only with the signatures of the Muslims and cow be declared as national animal, then we assure you that crores of Muslims will come forward.' Quoting the Holy Quran and Prophet Mohamed, he said that they have ruled against beef and advocated consumption of cow's milk. He appealed to Muslims in this country to understand and act accordingly.

Haji Taiyab Qureshi, President of '*Gauhatya Virodhi Muslim Sangharshana Samiti*' says, 'there is no precious thing than peace. The division of humanity into '*Darul Aman*' and '*Darul Harab*' was basically wrong. The Prophet had given a mission to make '*Darul Insan*' and therefore it is the duty of the Muslims to honour the feelings of the Hindus. He further asks, 'If the government can be pressurised to enact a law in the case of Shahbano, ignoring the decision of the Supreme Court, why can't we exert similar pressure on them for a law to ban cow slaughter completely.'

We should therefore unite such thinkers from all religions and project this common cause for the welfare of humanity so that the movement gathers the requisite momentum to bring in the necessary change in the hearts of men who rule. People should be educated extensively on the logistics of cow economics that can boost this country in particular as well as relive by our ancient wisdom and morals. Alternate economic opportunities in cow protection must be extended to those who are presently involved in cow slaughter. An all round scientific development of cattle industry can bring a sea change in the mindsets of those who oppose, with its opportunities and advantages. Dedicated and intelligent leadership is called for to lead the movement for a successful culmination with full government support to realise the concept '*Gaavo Vishvasya Maataram*', once again in this country.

***

# गोसूक्तम्

१.

**आ गावो अग्मन्नुत भद्रमक्रन्**
**सीदन्तु गोष्ठे रणयन्त्वस्मे ।**
**प्रजावतीः पुरुरूपा इहस्युरिन्द्राय**
**पूर्वीरुषसो दुहानाः ॥ (ऋ. ६.२८.१)**

गाव आग्मन् । अस्मदीयं गृहमागच्छन्तु । उतापि च भद्रं भजनीयं शुभमक्रन् । कुर्वन्तु । तथा गोष्ठेऽस्मदीये गवां स्थाने सीदन्तु । उपविशन्तु । तदनन्तरमस्मे अस्मासु रणयन्तु । रमन्ताम् । अपि चेहास्मिन् गोष्ठे पुरुरूपा नानावर्णा गावः प्रजावतीः प्रजावत्यः सन्ततिसहिताः पूर्वीर्ब्रह्म इन्द्राय इन्द्रार्थमुषस उषःकालान् प्रति दुहाना दोहमानाः स्युः । भवेयुः ।

२.

**न ता नशन्ति न दभाति तस्करो नासा-**
**मामित्रो व्यथिरा दधर्षति ।**
**देवांश्च याभिर्यजते ददाति च**
**ज्योगित्ताभिः सचते गोपतिः सह ॥ (ऋ. ६.२८.३)**

ता गावो न नशन्ति । अस्मत्सकाशान्न नश्यन्तु । किञ्च तस्करश्चोरोऽपि न दभाति । अस्मदीया गा न हिंस्यात् । तथा मित्रोऽमित्रस्य शत्रोः सम्बन्धि व्यतिः शस्त्रमासामिमा गा न दधर्षति । नाक्रमतु । गोपतिरेवम्भूतानां गवां स्वामी यजमानो याभिर्गोभिर्देवांश्चेन्द्रादीनुद्दिश्य यजते यजनं करोति । या गा इन्द्रार्थं

ददाति च प्रयच्छति च ताभिस्तादृशीभिर्गोभिः सह ज्योगित् चिरकालमेव सचते । सङ्गच्छताम् ।

३.

यूयं गावो मेदयथा कृशं चिद-
श्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचः
बृहद्वो वय उच्यते सभासु ।। (ऋ. ६.२८.६)

हे गावो ! यूयं मेदयथ । आप्यायनं कुरुथेत्यर्थः । तथा कृशं चित् क्षीणमप्यश्रीरं चिदमङ्गलमपि सुप्रतीकं शोभनाङ्गं कृणुथ । कुरुथ। हे भद्रवाचः कल्याणध्वन्युपेता गावोऽस्मदीयं गृहं भद्रं कल्याणं कृणुथ। गोभिरुपेतं कुरुथ । सभासु यागपरिषत्सु हे गावो ! युष्माकं बृहन्महद्वयोऽन्नमुच्यते । सर्वैर्दीयत इत्यर्थः ।

४.

**प्रजावतीः सूयवसं रिशन्तीः ।**
**शुद्धा अपः सुप्रपाणे बिभन्तीः ।**
**मा वः स्तेन ईशत माऽघशंसः**
**परि वो हेती रुद्रस्य वृज्याः ।। (ऋ. ६.२८.७)**

हे गावो! यूयं प्रजावतीः प्रजावत्यो वत्साभिर्युक्ता भवतेति शेषः। सुयवसं शोभनतृणं रिशन्ती रिशन्त्यो भक्षणार्थं हिंसन्त्यो भवत । सुप्रपाणे सुखेन पातव्ये तटाकादौ शुद्धा निर्मला अप उदकानि पिबन्तीः पिबन्त्यश्च भवत । वो युष्मान् स्तेनस्तस्करो मेशत । मेशिष्ट । ईश्वरो मा भूत् । तथाऽप्यघशंसो व्याघ्रादिः शत्रुर्मेशत । अपि च वो युष्मान्

रुद्रस्य कालात्मकस्य परमेश्वरस्य हेतिरायुधं च परि वृज्याः । परिवृणक्तु परिहरतु ।

५.

**आ सखायः सबर्दुघां धेनुमजध्व-**
**मुप नव्यसा वचः ।**
**सृजध्वमनपस्फुराम् ॥ (ऋ. ६.४८.११)**

हे सखायः ! समानख्याना अध्वर्यवः सबर्दुधाम् । सबरिति पयसो नाम । अमरणहेतुभूतस्य पयसो दोग्ध्रीं धेनुं गामजध्वम् । अभिगच्छत । प्राप्नुत । केन साधनेन ? नव्यसा नवीयसा नवतरेण वचो वचसाह्वानरूपेण शब्देन । तदनन्तरमनपस्फुराम् । स्फरतिर्वधकर्मा । अनपबाध्यां तां धेनुमुप सृजध्वम् । वत्सेनोपसृष्टां कुरुत । मरुद्देवत्यत्वात् मरुतां यागाय पयो दोग्धुमिति शेषः । अथवा मरुतां माता पृश्न्याख्या माध्यमिका वाग्धेनुः । हे सखायः ! स्तोतारः सबर्दुघां मरुज्जनहेतुभूतस्य पयसो दोग्ध्रीं धेनुं पृश्निं नव्यसा नवतरोणवचसा स्तोत्रेणोपाजध्वम् । उपागच्छत । अनपस्फुरामनपबाधनीयां तां सृजध्वम् । बन्धनाद् विसृजत । मुञ्चत । ईदृशी महती धेनुर्मरुतां माता किं वक्तव्यं तेषां माहात्म्यमिति मरुत्स्तुतिः ।

६.

**आत्वद्य सबर्दुघां हुवे गायत्रवेपसम् ।**
**इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥(ऋ. ८.१.१०)**

अनयेन्द्रं धेनुरूपेण वृष्टिरूपेण च निरूपयन् स्तौति । अद्येदानीं धेनुं धेनुरूपमिन्द्रं तु क्षिप्रमा हवे । आहूये । कीदृशीं धेनुम् । सबर्दुघां पयसो

दोग्ध्रीं गायत्रवेपसं प्रशस्यवेगां सुदुघां सुखेन दोग्धुं शक्याम् । अन्यामुक्तविलक्षणामुरुधारां बहूदकधारामिषमेषणीयां वृष्टिम् । एतद्रूपेण वर्तमानमरङ्कृतमलङ्कर्तारं पर्याप्तकारिणं वेन्द्रमाहूये ।

७.

**नि वर्तध्वं मानु गातास्मान्सिषक्त रेवतीः ।**
**अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ (ऋ. १०.१९.१)**

हे गावो ! हे आपो वा यूयं नि वर्तध्वम् । अस्मान्प्रत्यागच्छत । मानु यात । अस्मद्व्यतिरिक्तं यजमानं मा गच्छत । आगत्य च हे रेवती रेवत्यो धनवत्यो यूयमस्मान् सिषक्त । सेचयत । अवगाहत । गोदोहनस्नानपानादिद्वारेण सेवध्वमित्यर्थः । हे पुनर्वसू पुनःपुनर्वस्तरौ स्तोतॄणां यष्टॄणामाच्छादयितारौ एतन्नामकौ देवौ युवामस्मे अस्मासु रयिं व्रीह्यादिलक्षणं धनं धारयतम् । स्थापयतम् ।

८.

**गावो यवं प्रयुता अर्यो**
**अक्षन्ता अपश्यं सहगोपाश्चरन्तीः ।**
**हवा इदर्यो अभितः समायन्कियदासु**
**स्वपतिश्छन्दया ते ॥ (ऋ. १०.२७.८)**

गावः धेनवः प्रयुताः प्रकर्षेण मिश्रिताः । परस्परेण सह भूता वयं मद्दृष्टिजनितयवादिघासमक्षन् । अदन्ति । भक्षयन्ति । अर्यः सर्वस्य स्वाम्यहं ता गा अपश्यम् । पश्यामि । कीदृशीः ? सह गोपाः पशुपालकेन सहिताश्चरन्तीर्घासं भक्षयन्तीः । एवम्भूतास्ताः परया प्रीत्या पश्यामीत्यर्थः । किञ्च हवा वाहनदोहनार्थमाह्वानार्हा गावो अर्यः ।

द्वितीयार्थे प्रथमा । अर्यं स्वामिनं प्रत्यभितः सर्वतः समायन् । समित्येकीभावे । एकीभूयागच्छन्ति । इदिति पूरणः । आगतास्वासु गोषु स्वपतिः स्वानां गवां स्वामी कियत् क्षीरं छन्दयति । दोग्धुं कामयति । मदर्थं दोग्धीत्यर्थः । गाव आशिरं दुदुहे इति वचनात् ।

९.

**आ वो धियं यज्ञियां वर्त ऊतये**
**देवा देवीं यजतां यज्ञियामिह ।**
**सा नो दुहीयद्यवसेव गत्वी**
**सहस्रधारा पयसा मही गौः ॥ (ऋ. १०.१०१.९)**

हे देवाः ! होतार ऋत्विजः वो युष्माकमूतये यज्ञियां यज्ञार्हां धियं बुद्धिमा वर्ते । प्रवर्तये । यद्वा, हे देवा ऋत्विजः वो यज्ञियां धियं युष्माकं कर्तव्यत्वेन सम्बन्धिनीमस्माकमूतये रक्षणाया वर्ते । अपि च देवा एव सम्बोध्याः । हे देवाः ! वां युष्माकं धियं बुद्धिमा वर्ते । आवर्तयामि । किमर्थं ? ऊतयेऽस्माकं रक्षणाय । कीदृशीं धियम् ? यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्याम् । इहास्मिन् यागेऽस्यां भूमौ वा । एको यज्ञियामिति शब्दः पूरणः । सा धीर्नोऽस्माकं दुहीयत् । दुह्यात् । तत्र दृष्टान्तः । यवसेव यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्वा । पीत्वेति यावत् । पयसा सहस्रधारा मही महती गौर्यथा दुग्धे तद्वत् ।

१०.

**मयो भूर्वातो अभि वातूस्रा ऊर्जस्वती-**
**रोषधीरा रिशन्ताम् ।**

**पीवस्वतीर्जीवधन्याः ।**

**पिबन्त्ववसाय पद्वते रुद्र मृळ ॥ (ऋ. १०.१६९.१)**

वातो वायुर्मयोभूः सुखस्य भवयिता सन्नुस्रा गा अभि वातु । अभिगच्छतु । ताश्च गाव ऊर्जस्वतीरोषधीर्बलवन्ति तृणान्या रिशन्ताम्। अभितः स्वादयन्तु । तथा पीवस्वतीः प्रवृद्धाः जीवधन्या जीवानां प्राणयित्क्षीरमपश्च पिबन्तु । हे रुद्र ! ज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देवा पद्वते पादयुक्तायावसायान्नाय गोरूपाय मृळ उपदयां कुरु । मा बाधस्वेत्यर्थः ।

११.

**या देवेषु तन्वमैरयन्त यासां**

**सोमो विश्वा रूपाणि वेद ।**

**ता अस्मभ्यं पयसा पिन्वमानाः**

**प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ (ऋ. १०.१६९.३)**

या गावो देवेषु यष्टव्येषु तन्वमात्मीयम् शरीरमैरयन्त । हवीरूपेण प्रेरयन्ति यासां च गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि सोमो वेद जानाति अस्मभ्यमस्मदर्थं पयसा क्षीरेण पिन्वमाना वर्धमानाः अत एव प्रजावतीः प्रजाभिर्वत्सैरुपेतास्ता गा हे इन्द्र ! गोष्ठेऽस्मदीये रीरिहि गमय । रीगतिरेषणयोः । छान्दसो विकरणस्य श्नुः ।

१२.

**प्रजापतिर्मह्यमेता रराणो**

**विश्वैर्देवैः पितृभिः संविदानः ।**

**शिवाः सतीरुप नो गोष्ठमाकस्तासां**
**वयं प्रजया सं सदेम ॥ (ऋ. १०.१६९.४)**

प्रजापतिर्विधाता मह्यं स्तोत्र एता गा रराणः प्रयच्छन् । रातेर्व्यत्ययेन शानच् । छान्दसः शपः श्लुः । अभ्यस्थानामादिरित्याद्युदात्तत्वम् । विश्वैः सर्वैर्देवैः पितृभिश्च संविदान ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीः भवतीः गा नोऽस्माकं गोष्ठं व्रजमुप गोष्ठसमीपेऽकः । करोतु । तासां गवां प्रजया सन्तानेन वयं सं सदेम । सङ्गच्छेमहि । सदेराशिषि लिङ्याशिष्यङ् ।

## शान्ति मन्त्र

**शं नः सत्यस्य पतयो भवन्तु शं नो**
**अर्वन्तः शमु सन्तु गावः ।**
**शं न ऋभवः सुकृतः सुहस्ताः**
**शं नो भवन्तु पितरो हवेषु ॥**

***

# गोमहिमा

डा. रङ्गनाथ कट्टि
उपनिदेशकः, पूर्णपज्ञसंशोधनमन्दिरम्

जगतीतलेऽस्मिन् गवां विशिष्टं स्थानमस्ति । समुद्रमथनकाले सर्वप्रथमतया पञ्चगावः प्रादुर्भूताः । तदनन्तरमन्यान्यवस्तूनि प्रादुरभवन् । एवञ्चामृतादपि पूर्वं जाता गावोऽमृताग्रजा इति प्रथिताः । दर्शनमात्रेण[१] ताः जगत् पावयन्ति । तासां महिमानं समग्रतया को वाऽनुवर्णयेत् ? चतुर्दशलोकपालकः भगवान् स्वयं गोपालको भूत्वा गाः अपालयद् गोविन्द इति नामाभजच्च इत्येतेनैव विदितं भवति गोषु महती प्रीतिः सदा भगवतो वर्तत इति । 'गोब्राह्मणबन्धुः' इति अत एव प्रसिद्धो भगवान्, द्वापरयुगेऽश्रुमुखीं गोरुपधरां धरां वीक्ष्य झटिति धराभारापहरणोद्युक्तोऽभूत् । एवं परमपुरुषप्रीतिभाजः गावः परार्थमेव जीवन्ति परार्थमेव चरन्ति परार्थमेव दुहन्ति च । तच्चोक्तं- **'परोपकाराय दुहन्ति गावः'** इति । गावः स्वपयसा, दध्ना, घृतेन, गोमयेन, चर्मणा, अस्थिभिः, शृङ्गैश्च जगतः बहूपकुर्वन्ति । तासां चेष्टाः सर्वाः लोकहितायैव । ताः ब्राह्मणैः साकं ब्रह्मलोकं गमिष्यन्ति । अत एव कोविदाः गां ब्राह्मणं चैकमेव वदन्ति । तथा चोक्तम्-

**'एकं गोब्राह्मणं तस्मात् प्रवदन्ति मनीषिणः'** इति ।

---

१. अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत्तु नित्यशः ।

२. कपिलां दर्पणं भानुं भाग्यवन्तं च भूपतिम् ।
आचार्यमन्त्रदातारं प्रातः पश्येत् पतिव्रताम् ॥

पूर्वकाले गोसृष्ट्यनन्तरं सर्वाः गाव एकत्र मिलित्वा एकलक्षवर्षपर्यन्तं बहुदुष्करं तपश्चक्रुः । सर्वेभ्यः प्राणिभ्यः सकाशादस्माभिः श्रेष्ठता सम्पादनीया । लोके प्रचलितासु सर्वास्वपि दक्षिणासु अस्माभिरेव श्रेष्ठैर्भाव्यम् । अस्माकं यस्य कस्यापि दोषस्य लेपो मा भूत् । अस्माकं गोमयेन ये स्नास्यन्ति ते सर्वे पूता भवन्तु । नरैर्वाऽमरैर्वा पावित्र्यर्थम् अस्माकं गोमयस्योपयोगः कार्यः । सर्वे प्राणिनोऽस्माकं गोमयेनैव शुद्ध्यन्ताम् । सत्पात्रेषु ये गोदानं कुर्वन्ति तेषामस्मल्लोकप्राप्तिर्भवतु । इत्याद्युद्देशस्तासां तपस आसीत् । तासां तपसा तुष्टः ब्रह्मा फलितं च भवतु भवन्मनोरथद्रुमेण इत्यवोचत् । स्वाभीष्टसिध्यनन्तरं तपसोद्गताः ता गावः कालत्रयेऽपि विश्वस्य मातरः सम्पन्नाः । तस्माद् अस्माभिः प्रातः काले सायङ्काले च गावोऽवश्यं नमस्कर्तव्याः । पापपरिहारश्च भवत्यनेन । तथा चोक्तम्-

**घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।**
**घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥**
**घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।**
**घृतं सर्वेषु गोत्रेषु घृतं मे मनसि स्थितम् ।**
**गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।**
**गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥**
**इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा**
**यदह्नात् कुरुते पापं तस्मात् स परिमुच्यते ॥** इति ।

## गोमय-गोमूत्रयोः लक्ष्मीसन्निधानम्

गोमय-गोमूत्रयोः लक्ष्मीर्वसति । श्रूयते विषयेऽस्मिन् काचन कथा । कदाचिल्लोकमाता रमा कमनीयं रूपमास्थाय गोष्ठं प्रविवेश ।

असाधारण्या रूपसम्पदा शोभायमानां तां वीक्ष्य गावो विचारयामासुः । 'कैषा योषा काञ्चनानर्घ्यभूषा' ? इति । पर्यपृच्छंश्च तामेव । का त्वम्? कस्मादभ्यागता ? इति । तदा लक्ष्मीर्वदति । अहं 'श्रीः' इति प्रथिताऽस्मि । शरण्यां मां ये शरणं गच्छन्ति ते सर्वे सूर्यचन्द्रवरुणादयः देवाः, ऋषयश्च सदा सानन्दा भवन्ति । चतुर्विधपुरुषार्थेषु धर्मार्थकामाः मम सहयोगे सत्येव मानवस्य सुखदायका भवन्ति । अहं भवच्छरीरेषु शाश्वतं वस्तुमभिलषामि । यूयं ममाऽश्रयं दत्वा श्रीसम्पन्ना भवत' इति । तदा गावः 'न श्रीरेकत्र तिष्ठति' इति लक्ष्म्याः [1]चञ्चलताम् अस्थिरतां च वीक्ष्य, तस्यां सत्स्वप्यपारेष्वादरगौरवेषु स्वस्मिन् शरीरे वस्तुं नानुमन्यन्त । तदा रमाऽऽलोचितवती । सर्वस्य सर्वदा सर्वदात्र्य इमा गावः स्वयम्प्रेरणयाऽऽगतां मां यदि तिरस्कुर्युस्तदा सर्वस्मिन् जगत्यहं तिरस्कृता उपेक्षिता च स्यामिति भीत्या गाः प्रति अवोचत्- शरणागताया मम भवच्छारीरे यस्मिन् कस्मिन्नप्यङ्गे वासमनुमन्यन्तु इति । तदा गावः रमाप्रार्थनामङ्गीकृत्य स्वगोमूत्र-गोमययोः सन्निधातुम् अनुमतिं ददुः । ततः पश्चात् लक्ष्मीर्गोमय-गोमूत्रयोः सन्निहिता बभूव ।

## गोलोकमहिमा

पुरा सत्ययुगे दक्षपुत्री सुरभिः पादेनैकेनावनिमास्थाय एकादशवर्षसहस्रपर्यन्तं सुघोरं तपः कृतवती । कैलासशिखरे श्रेष्ठं योगमास्थाय तपः कुर्वत्यास्तस्या तपसा तुष्टश्चतुर्मुखब्रह्मा तस्याः पुरतः प्रादुर्भूयावदत् । स्वर्ग-मर्त्य-पाताललोकेभ्य उपरि विद्यमाने लोके भवत्या वासो भवतु । स च लोकः 'गोलोकः' इति प्रसिध्यतु इति ।

---

१. 'मनो मधुकरो मेघो मानिनी मदनो मरुत् ।
मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलः ॥' इति सुभाषितम् ।

तस्मादेव कारणाद् गोलोकः, देवानां लोकपालानां च लोकादुपरि वर्तते। गावः स्वकर्मभिः ऋषीन् प्रजाश्च परिपालयन्ति। तासां व्यवहारे नैवास्ति कुटिलता। सदा सत्कर्मसु व्यापृतास्ताः।

गोलोकास्तावत् कालातीताः। तत्रत्यानां वृद्धाप्यं न सम्भवति। न किञ्चिदशुभं तत्र भवति। रोगादिबाधा तत्र नास्ति। तत्रत्यानां सर्वाणि वस्तूनि सङ्कल्पमात्रात् सिध्यन्ति। तत्र गावः स्वेच्छया सञ्चरन्ति। तस्मिन् गोलोके, कूपाः, सरांसि, नद्यः, नानाविधानि वनानि, दिव्यसौधाः, गिरयश्च दृश्यन्ते। ये सहिष्णवः, दयालवः, गुर्वाज्ञानुवर्तिनः, अहङ्कार-ममकारविदूराः, तादृशा उत्तमपुरुषा गोलोकं प्राप्नुवन्ति। यो मांसं न भक्षयति यश्च भगवच्चिन्तने सर्वदा रतः, यश्च धर्मपरायणः, यः मातापित्रोः शुश्रूषां सभक्तिश्रद्धं करोति, यः सत्यनिष्ठः, यः गोविषये ब्राह्मणविषये वा न क्रुध्यति, यः दानशीलः, यः गुरुशुश्रूषां करोति यः जितेन्द्रियः प्राणिषु दयावांश्च स सद्गुणपरिपूर्णः पुरुष एव गोलोकान् प्राप्नोति। गोलोके पुण्यकर्मिणः पूर्णकामाः सफलमनोरथाः सन्तः विहरन्ति। तत्रत्याः शोकरहिताः कोपरहिताश्च भवन्ति।

गोषु युगन्धरा, सुरूपा, बहुरूपा, विश्वरूपा, इति नाम्ना प्रथिताश्चतस्रः गावः सकलप्राणिनां मातृस्थानीयाः। एतासां गवां पवित्रनामोच्चारणेनैव पुरुषः गोलोकमाप्नोति। गोभक्तः यद्यद् अपेक्षते तत्सर्वं लभते। गोभक्ताः स्त्रियः सर्वान् कामान् लभन्ते। तथा चोक्तम्-

**गोषु भक्तश्च लभते यद्यदिच्छति मानवः।**
**स्त्रियोऽपि भक्ता या गोषु ताश्च काममवाप्नुयुः॥** इति।

परस्त्रीगामिनः, गुरुहन्तारः, अनृतवक्तारः, परनिन्दकाः, द्विजवैरभाजश्च पुण्यतममिमं गोलोकं न लभन्ते। मित्रद्रोहिणः, वञ्चकाः,

कृतघ्नाः, शठाः, कुटिलाः, धर्मद्वेषिणः, ब्रह्मघ्नाश्च स्वप्नेऽपि गोलोकमिमं द्रष्टुं न प्रभवन्ति । गोमहिमाश्रवणपठनादिभिः सर्वः सर्वं प्राप्नोति । तथा चोक्तम्-

**पुत्रार्थी लभते पुत्रं कन्यार्थी तामवाप्नुयात् ।**
**धनार्थी लभते वित्तं धर्मार्थी धर्ममवाप्नुयात् ॥**
**विद्यार्थी चाऽऽप्नुयाद् विद्यां सुखार्थी प्राप्नुयात् सुखम् ।**
**न किञ्चिद् दुर्लभं चैवं गवां भक्तस्य भारत ॥** इति ।

**गोदानमहिमा**

पृथिव्यां गावः प्राप्ति-पुष्टि लोकसंरक्षणेभ्यः सूर्यपादैः (सूर्यरश्मिभिः) तुल्याः । गोशब्दः धेनुवाची रश्मिवाची च यतोऽतः सूर्यरश्मिसमा गावः इति वर्णिताः । गोभिरेव सन्ततिरुपभोगाश्च सर्वेषां सम्भवन्ति । तस्माद् गोदाता रश्मियुक्तसूर्य इवाऽभाति । तच्चोक्तम्-

**प्राप्त्या पुष्ट्या लोकसंरक्षणेन**
**गावस्तुल्याः सूर्यपादैः पृथिव्याम् ।**
**शब्दश्चैकः सन्ततिश्चोपभोगाः**
**तस्माद् गोदः सूर्य इवावभाति ॥** इति ।

गोदानात् पुण्यतरं दानमन्यन्नास्ति । गोदानात् पुण्यतरं फलं चान्यन्न सम्भवति । गोभ्यः विशिष्टं वस्तु लोके न भूतं न भविष्यति च । उक्तं चैतत्-

**'नातः पुण्यतरं दानं नातः पुण्यतरं फलम् ।**
**नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥** इति ।

तस्माद् गोदानं सर्वैरवश्यं कर्तव्यमिति ज्ञायते । भूम्याः गोरूपस्य

विद्यमानत्वाद् भूदानेऽसमर्थानां गोदानं विहितं शास्त्रे। मुमुक्षूणां तावत् पञ्चविधं गोदानं विहितम्।

१. अन्तधेनुदानम्

२. रुद्रधेनुदानम्

३. ऋणधेनुदानम्

४. मोक्षधेनुदानम्

५. वैतरणीधेनुदानम्

तत्राऽद्यं धेनुदानमात्मशुद्ध्यर्थं, द्वितीयं धेनुदानं मरणसमयकालीनातिशयदुःखापनोदार्थं, तृतीयं गोदानमृणपरिहारार्थम्, तुरीयं मोक्षधेनुदानं पापपरिहारद्वारा तत्त्वज्ञानेन मोक्षप्राप्त्यर्थं, पञ्चमं वैतरणीधेनुदानं यममार्गमध्ये विद्यमानायाः वैतरण्या अनायासेन तरणार्थं च विहितम्। पञ्चविधगोदानेऽसमर्थानां सवत्सायाः क्षीरसंयुतायाः कपिलायाः दानं विहितम्। सर्वमेतदुक्तं भगवता वैनतेयं प्रति-

**'अन्येषां भूमिदानार्थं गोदानं कथितं मया।**
**ततोऽन्तधेनुर्दातव्या रुद्रधेनुं प्रदापयेत्।**
**ऋणधेनुं ततो दत्वा मोक्षधेनुं प्रदापयेत्।**
**दद्याद् वैतरणीं धेनुं विशेषविधिना खग॥**
**दत्वा धेनुं सकृद् वाऽपि कपिलां क्षीरसंयुताम्।**
**सोपस्करां सवत्सां च तपोवृत्तसमन्विते।**
**ब्राह्मणे वेदविदुषि सर्वपापैः प्रमुच्यते॥'** इति।

(गरुडपुराणम्- प्रेतकाण्डः - अ.८, श्लो.५४-५७)

## गोमूल्यमेव ऋषिमूल्यम्

पुरा च्यवनमहर्षयः द्वादशवर्षाणि यावद् वारिमध्ये दृढव्रतानुष्ठान-निरता आसन्। एकादाऽऽगते गङ्गायमुनयोः भीकरप्रवाहे ते निमग्नाः। तथाऽपि तेषां तपोभङ्गो नाभूत्। एतस्मिन्नेव काले केचन मत्स्यजीविनः दाशाः मत्स्योद्धरणाय तत्राऽगताः। ते जालैरभ्यकिरन् गङ्गयमुन-योर्वारि। यत्र च्यवनमहर्षयस्तपोमग्नाः। ततः पश्चात् ते दाशाः जलेऽवतीर्य जालं चकृषिरे। तदा मत्स्यैः परिवृतं वेदपारगं च्यवनमहर्षिं दृष्ट्वा भीताः दाशाः 'क्षन्तव्या इमे जनाः' इति प्राञ्जलयस्तं साष्टाङ्गं प्राणमन्। अथ च्यवनमहर्षपस्तानवदन् 'अहं मत्स्य इति बुद्ध्या युष्माभिर्जाले गृहीतः। अतः मां यस्य कस्यापि विक्रीय धनं लभत' इति। परन्तु महातपस्विनं परमतेजस्विनं ऋषिपुङ्गवं मूल्येन क्रेतुं को वा शक्नुयात्? अतः भयकम्पिताः विवर्णवदनाः दाशाः सर्वे नहुषाय वृत्तान्तं न्यवेदयन्। तच्छ्रुत्वा नषुषः च्यवनमहर्षिसमीपं त्वरितः प्रपयौ सामात्यपुरोहितः। अवदच्च- 'करवाणि प्रियं किं ते तन्मे ब्रूहि द्विजोत्तम' इति। तदा च्यवनमहर्षयः कथयन्ति राजन्! महता श्रमेणैभिः कैवर्तेर्मत्स्यजीविभिरहं गृहीतः। तस्मान्मत्स्यानां विक्रयैः सह मम मूल्यमेभ्यः प्रयच्छ इति। तदा चक्रवर्ती नहुषः लक्षसुवर्णनाण्यानि दाशेभ्यः दातुं पुरोहितानाज्ञापयामास। तदाऽसन्तुष्टः मुनिवरः 'नाहं लक्षसुवर्णनाण्यैः निमेयः' सदृशं मूल्यं दीयतामित्युक्तवान्। तदा नुहषस्तर्हि कोटिः प्रदीयतां मूल्यमिति पुरोहितेभ्य उक्तवान्। अथाप्यसन्तुष्टश्च्यवनमहर्षिः 'राजन् नाहाम्यहं कोटिम्' तस्माद् भूयो सदृशं मूल्यं प्रदीयताम् इति। तदा ममार्धराज्यं वा समग्रं वा राज्यमृषि-मूल्यमिति ज्ञात्वा तद्दातुं यदा प्रवृत्तः नहुषस्तदा ऋषिर्भणति। राजन्!

अर्धं राज्यं वा समग्रं वा मम मूल्यं न भवति । विषयेऽस्मिन् ऋषिभिः साकं समालोच्य मम सदृशं मूल्यमेभ्यः दाशेभ्यः देहीति । महर्षेर्वचनं श्रुत्वा दुःखकर्शितः राजाऽमात्यपुरोहितैः साकं समालोचयामास ।

एतस्मिन्नेवावसरे कश्चन गविजातः मुनिवरः नहुषसमीपमाजगाम । अब्रवीच्च- राजन् ! वेद्म्यहमृषिमूल्यं किमिति । तदा हर्षाविष्टेन नहुषेन पृष्टः स मुनिवतरोऽकथयत्' एकगोमूल्यमेव ऋषिमूल्यं भवतीति । तदा परमसन्तुष्टः राजा च्यवनमहर्षिसमीपमागत्य ब्रवीति– 'उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोऽसि भार्गव' इति । तच्छ्रुत्वा च्यवनो वक्ति–

'उत्तिष्ठाम्येव राजेन्द्र सम्यक् क्रीतोऽस्मि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ॥

कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिवा ।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ २७ ॥

गावो लक्ष्याः सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ २८ ॥

स्वाहाराकवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ २९ ॥

अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ ३० ॥

तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत् तेजः प्राणिनां च सुखप्रदाः ॥ ३१ ॥

निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयाति तं देशं पापं चास्यापकर्षति ॥ ३२ ॥

**गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः ।**
**गावः कामदुघो देव्यो नान्यत् किञ्चित् परं स्मृतम् ॥ .३३ ॥**
**इत्येतद् गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ।**
**गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ३४ ॥** इति ।

(महाभारतम्-अनुशासनपर्व- अ-५१, श्लो.२७-३४)

तत्पश्चात् चक्रवर्तिना नहुषेण दाशेभ्यः दत्तां तां गां, दाशानां प्रार्थनया च्यवनमहर्षय एव स्वीकृत्याब्रुवन्- भो दाशाः ! अनेन गोदानजेन पुण्येन भवतां पापं भस्मासाद्गतम् । इतः परं एतज्जलोद्भवैर्मत्स्यैः साकं यूयं क्षिप्रं दिवं गच्छत' इति । ततः महर्षेः प्रभावात् सर्वेषु पश्यत्सु सत्सु ते दाशाः मत्स्यैः साकं दिवं ययुः । तद् वीक्ष्य विस्मितः राजा नहुषः महर्षीन् गाश्च सम्पूजयामास ।

## गोमातुरनुपमं पुत्रवात्सल्यम्

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति सूक्तिः भारतीयसमाजे जनन्याः स्थानमनुपममित्यावेदयति । नवमासानि यावत् गर्भे धृत्वा पश्चात् सुतं सूत्वा स्वक्षीरेण शिशुं पोषयित्री करुणामयी ममतामयी वात्सल्यमयी माता कस्य न स्यादभिमता । तथाऽपि सा माताऽस्माकं शैशवे एव क्षीरं पापयति न यौवने नापि वार्धके । परन्तु गोमातुः क्षीरं वयं न केवलं शैशवे किन्तु यौवने वार्धके च पिबामः ।

अस्माकं यावज्जीवं विना प्रतिफलापेक्षां महोपकृतिं वितन्वाना गोमाता स्वपोतेष्वनुपमां वात्सल्यधारां प्रवहमाना सुरराजस्यापि विस्ययं कृतवती । विषयेऽस्मिन् काचन रमणीया कथा रामायणे श्रूयते ।

पितृवाक्यपरिपालनाय ससीते सलक्ष्मणे रामे वनं गतवति सति दशरथः

पुत्रवियोगान्मृतिमाप । तदा कुलगुरूणां वसिष्ठमहर्षीणामादेशेन मातुलगृहाद् भरत-शत्रुघ्नौ आकारितौ । शरवेगेण अयोध्यां प्रत्यागतः भरतः, मृतं स्वपितरं दशरथं, वनं गतं राघवं च श्रुत्वा दुःखसन्तप्तोऽभूत् । एतत्सर्वं स्वमात्रा कैकेय्यैव संवृत्तमिति ज्ञात्वा भरतः केकेयीं निन्दयामास-

**'मातृरूपे ममामित्रे नृशंसे राज्यकामुके ।**
**न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ।।'** इति ।

(रामायणम् - अयोध्याकाण्डम् - श्लोक- ७४-७)

अपि च मातरं प्रति कथयति - मातः ! कौसल्यायाः रामः एक एव पुत्रः । तं विना साध्वी सा कौसल्या कथं वा सुखेन जीवेत् ? विषयेऽस्मिन् काञ्चन कथां श्रावयति भरतः ।

एकदा गगनमार्गे सञ्चरन्ती देवलोकस्य कामधेनुः (सुरभिः) भूम्यां हलं कर्षन्तौ स्वपुत्रौ (वृषभौ) वीक्षितवती । यौ च हलाकर्षणेन श्रान्तौ सूर्यकिरणैः सन्तप्तौ कृषिककशाताडनेन जर्झरितौ च आस्ताम् । तौ बृषभौ दृष्ट्वा पुत्रशोकेन बाष्पपर्याकुलेक्षणा सा सुरभिः रुरोद । तदा तदधस्ताद् गच्छतः सुरराजस्योपरि तद्दुःखाश्रुबिन्दवोऽपतन् । येनोद्विग्नोऽभूत् सुरराट् । झटिति ऐरावतादवतीर्य प्राञ्जलिः कथयति-

**भयं कश्चिन्न चास्मासु कुतश्चित् विद्यते महत् ।**
**कुतो निमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि ।।** इति ।

तदा सुरभिः-

**शान्तं पापं न वः किञ्चित् कुताश्चिदमराधिप ।**
**अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ।।**

**एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ ।**
**वध्यमानौ बलीवर्दौ कर्षकेण दुरात्मना ॥**

**मम कायात् प्रसूतौ हि दुःखितौ भारपीडितौ ।**
**यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥**

(अयोध्या - ७४.२२-२४) ।

इति कथयन् भूलोके दुःखमनुभवन्तौ स्वपुत्रौ सुराजाय दर्शयामस ।

अथ सुरभिवचः श्रुत्वा देवराजः मनस्येवमचिन्तयत् । अस्याः सुरभ्याः पुत्रसहस्रैरिदं कृत्स्नं जगद् व्याप्तम् । तथाऽपि तन्मध्ये दुःखमनुभवन्तं वृषभद्वयं दृष्ट्वा इयं पुत्रशोकेन रुरोद । तस्मात् लोकेऽस्मिन् मातुः पुत्राद् अधिकं प्रियमन्यन्नास्ति इति । तत्पश्चात् तां सुरभिं बहुमन्यते स्म ।

कथामिमां कथयित्वा मातरं प्रति वदति भरतः - मातः ! सत्स्वपि सहस्रेषु पुत्रेषु, दुःखितौ द्वौ वृषभौ वीक्ष्य पुत्रशोकेन सा कमाधेनुः रुरोद । सति चैवं एकपुत्रा साध्वी कौसल्या विना रामं कथं वा जीवेत् ? धिक् तव जीवितम् । इति ।

**कपिलगोमहिमा**

सच्छीलाः, हृष्टपुष्टाः, सुगन्धिन्यः, बालाः कपिलाः गावः सर्वैरपि प्रशंस्यन्ते । यथा सरित्सु गङ्गा वरा तथा गोषु कपिला गौर्वरा । पुरा सृष्टेः प्रारम्भे स्वयम्भूर्ब्रह्मा प्रजासर्जनार्थं प्रथमं प्रजानां वृत्तीः कल्पयित्वा पश्चात् प्रजाः ससर्ज । जातमात्राः सकलप्राणिनः जीवनोपयार्थं कोलाहलं कुर्वन्तः दक्षप्रजापतिसमीपमाययुः । विषयमिमं ज्ञात्वा दक्षप्रजापतिः स्वप्रजानां जीविकार्थममृतमपिबत् । अमृतपानेन तृप्तस्य प्रजापतेर्मुखात् सुगन्धः निःसृतः । सुगन्धेन साकं सुरभ्याख्या गौरपि

जाता । यया- विश्वस्य मातरः सौरभ्याख्या गावः सृष्टाः, स्वर्णवर्णाः याश्च सौरभेयीधेनवः कपिलाधेनवः इति जगति प्रथिताः ।

कदाचित् सुरभ्याः शिशोः (वत्सस्य) वदनान्निःसृतं फेनं, भूमौ स्थितस्य परशिवस्योपरि अपतत् । तेन क्रुद्धः परशिवः ताः गा वीक्षितवान् । येनेतः पूर्वं स्वर्णवर्णास्ताः गावः अन्यान्यवर्णतामापन्नाः । तदा दक्षप्रजापतिः परशिवं प्रति 'गोषु उच्छिष्टमित्येव नास्ति । वाय्वग्निसुवर्णसमुद्रामृतानि यथा नोच्छिष्टानि तथा गोवत्सनिःसृतफेनं वा क्षीरं वा नोच्छिष्टतां भजते इत्युक्त्वा, नैकगोभिः साकं वृषभमेकं च दत्वा तं प्रसादयामास । परमसन्तुष्टः परशिवः वृषभं स्वध्वजचिह्नं कृत्वा वृषभध्वजोऽभूत् । पश्चाद् देवाः परशिवं पशूनामधिपं चक्रुः ।

त्रयस्त्रिंशत्कोटिदेवानामावास्थानहेतोश्चलद्देवालयत्वेन प्रथितायाः, समस्तप्रपञ्चस्य पञ्चगव्य-प्रदानद्वारा चलत्तीर्थालयत्वेन प्रथितायाः, रोगनिवारकौषधीयगुणगणित्वाद् चलदौषधालयत्वेन च प्रसिद्धायाः गोः रक्षणमस्माभिरवश्यं कर्तव्यमेव ।

## गोशुश्रूषा

'मात्रा समं नास्ति शरीरपोषणम्' इति सुभाषितोक्तरीत्याऽस्मच्छरीरं माता यथा प्रीत्या पोषयति तथा नान्ये पोषयन्ति । एवमेव पञ्चगव्येनास्मान् प्रीत्या पोषयन्तीनां गवां सेवाऽस्माभिरवश्यमादरेण विधेयैव । अन्यथा वयं कृतघ्ना भवेम । जात्वपि अस्माभिः गवामुपेक्षा न कार्या । दुष्टमृगशून्यप्रदेशे प्रचुरतृणोपेतप्रदेशे गावश्चारयितव्याः । निरुपद्रवप्रदेशे गोष्ठनिर्माणं कार्यम् । गोष्ठे तावत्स्वच्छता सदाऽऽवश्यकी । काले काले तत्रत्यगोमयगोमूत्रयोरुद्धरणं क्रिमिकीटकादीनां

निष्कासनं च कार्यम् । तत्र सर्वदा सर्वे देवाः सन्निहिताः यस्मात्तस्मात् सर्वदा तत्र शुद्धिरपेक्ष्यते । यथाऽस्माकं शयनागारस्तथा गोवास-स्थलेनापि शुभ्रेण भाव्यम् । वात-शीतोष्णादिभिास्मच्छरीरमिव गावोऽस्माभिः रक्षणीयाः । अस्मत्प्राणा इव गावः रक्षणीयाः । यथाऽस्माकं सुखदुःखादि तथा तासामपि सुखदुःखादिकमस्ति । गो-रक्षणार्थं कृतेऽपि शस्त्रग्रहणे ब्राह्मणाय वा वैश्याय न दोषः सम्भवति । तथा चोक्तम्-

**गवार्थे ब्राह्मणार्थे वा वर्णानां वाऽपि सङ्करे ।**
**गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ।। इति ।**

**यद्गृहे दुःखिता गावः स याति नरकं नरः ।**

तृणं चरतः जलं पिबतश्च गोः विघ्नं न करणीयम् । यो विघ्नं विधत्ते स ब्रह्मघातको भवति ।

तथा चोक्तं महाभारते-

**गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।**
**उत्पादयति यो विघ्नं तमाहुः ब्रह्मघातकम् ।। इति ।**

### गोसेवाव्रतेन पुत्रप्राप्तिः

पूर्वमृतम्भरनामकः कश्चन राजाऽऽसीत् । तस्याऽसन् बह्व्यः पत्न्यः। परन्तु तस्य पुत्रसम्पन्नाऽसीत् । तच्चिन्तया म्लानवदनः कृशाङ्गः सः स्वसमीपमागतं जाबालिमहर्षिमर्घ्यपाद्यादिभिः सत्कृत्य तेषां पुरतः स्वदुःखं निवेदितवान् । पर्यपृच्छच्च 'भगवन् गुरुवर्य केनोपायेन मे सत्पुत्रप्राप्तिर्भवेत्' इति । तदा जाबालिमहर्षयः गोमहिमानं वर्णयन् कथयन्ति-

**'विष्णोः प्रसादे गोश्चापि शिवस्याप्यथवा पुनः'** इति ।

राजन् ! विष्णोः सेवया, गोसेवया, शङ्करस्य च सेवया पुत्रप्राप्तिर्भवतीति । एतच्छ्रुत्वा परमसन्तुष्टः ऋतम्भरः गोसेवाविधानं तन्मुखाच्छ्रुत्वा गोसेवायां दीक्षितः सन् अहर्निशं निर्मलमनसा सभक्तिश्रद्धं गोसेवां विधाय 'सत्यवान्' नामकं सत्पुत्रं लेभे ।

एवं त्रेतायां चक्रवर्ती दिलीपः ब्रह्मर्षीणां वसिष्ठानामादेशानुसारेण कामधेनुपुत्र्याः नन्दिन्याः सेवां विधायानुपमं पुत्रं प्राप्तवान् । यश्च सूर्यवंशे रघुरिति प्रख्यातः । पूर्वं दिलीपः देवदानवयुद्धे देवानां साह्यं कृत्वा स्वर्गाद् भूलोकं प्रति शरवेगेणाऽयाति स्म । मार्गमध्ये कल्पवृक्षस्य छायायां कामधेनुः विराजमानाऽऽसीत् । प्रदक्षिणनमस्कारादिभिः पूजार्हां तां न गणयामास । तदा दिलीपेन प्रदक्षिण-नमस्कारादिभिरसत्कृता सुरलोककामधेनुः दिलीपं शप्तवती । विना मत्सन्ततिसेवां तव सन्ततिर्मा भूत् इति । अतः वसिष्ठानामादेशानुसारेण तदाश्रमस्थां कामधेनुपुत्रीं नन्दिनीं सन्तोषयित्वा चक्रवर्ती दिलीपः गुणवन्तं रघुनामकं पुत्रं प्राप्तवान् । इतःपूर्वं सूर्यवंश इति प्रख्यातः वंशस्तत्पश्चाद् रघुवंश इति प्रसिद्धिमभजत् ।

## गोशरीरे सकलदेवतासन्निधानम्

सर्वैः देवाः गोशरीरे सन्निहिताः । तदुक्तं वराहेण गोशरीरे देवतानिवेशो यथा-

**'दन्तेषु मरुतो देवा जिह्वायां तु सरस्वती ।**
**क्षुरमध्ये तु गन्धर्वः क्षुराग्रेषु तु पन्नगाः ॥**
**सर्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।**

**ककुदि सर्वनक्षत्राः लाङ्गूले धर्म अश्रितः ।**
**अपाने सर्वतीर्थानि प्रस्रावे जाह्नवी नदी ।**
**नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ।**
**ऋषयः रोमकूपेषु गोमये पद्मधारिणी ।**
**रोम्रेषु सन्ति विद्याश्च त्वक्केशेष्वयनद्वयम् ।**
**धैर्यं धृतिश्च कान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।**
**स्मृतिर्मेधा तथा लज्जा बहुकीर्तिस्तथैव च ।**
**विद्याशान्तिर्मतिश्चैव सन्ततिः परमा तथा ।**
**गच्छन्तमनुगच्छन्ति एतां गां वै न संशयः ।**
**यत्र गावो जगत् तत्र देवदेवः पुरोगमः ।**
**यत्र गावो तत्र लक्ष्मीः साङ्ख्यं धर्मश्च शाश्वतः ।**
**सर्वरूपेषु ता गावस्तिष्ठन्त्यभिमतः सदा ॥**
**गावः पवित्रमाङ्गल्या देवानामपि देवताः ।**
**यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते ॥'** इति ।

एवं त्रयस्त्रिंशत्कोटिसङ्ख्याकदेवतानामाश्रयभूतेयं गौश्चलद्देवालय इत्युक्ते न किमप्याश्चर्यम् ।

**वृषोत्सर्गः**

**'पितरो वृषभा ज्ञेयाः गावो विश्वस्य मातरः'** इति वचनेन जगतः गावः यथा मातरः तथा वृषभाः पितर इति ज्ञायते । मृतानां सद्गत्यर्थम् एकादशेऽह्नि गोदानमिव वृषोत्सर्गोऽपि (बृषभत्यागः) विहितः । हीनाङ्गं, रोगिणं, बालं वृषं परित्यज्य सलक्षणं युवानं वृषभमुत्सृजेत् मृतानां सद्गत्यर्थम् ।

तत्र रक्ताक्षः यस्तु पिङ्गलः, शृङ्गे, गले खुरे च रक्तः, श्वेतोदरः कृष्णपृष्ठो वृषभः ब्राह्मणस्य, सुस्निग्धवर्णः रक्तः वृषभः क्षत्रियस्य, पीतवर्णः वृषभः वैश्यस्य, कृष्णः वृषभः शूद्रस्य विहितः । यस्तु सर्वाङ्गपिङ्गः पादेषु पुच्छे च श्वेतः तादृशः वृषभः वर्णचतुष्टयस्यापि विहितः ! तत्र नीलवृषे पञ्चप्रभेदाः सन्ति ।

१. नीलवृषः
२. रक्तनीलवृषः
३. नीलपिङ्गवृषः
४. बभ्रुनीलवृषः
५. महानीलवृषः इति ।

१. **नीलवृषः-** यस्य वृषभस्य चरण-मुख-पुच्छानि श्वेतानि अन्यत्र लाक्षारसवर्णः सः वृषभः 'नीलवृषः' इत्युच्यते ।

२. **रक्तनीलवृषः-** यश्च वृषभः वर्णेन लोहितः, मुखे पुच्छे च पाण्डुरः खुरविषाणयोः पिङ्गश्च स वृषभः 'रक्तनीलवृषभः' इति कथ्यते ।

३. **नीलपिङ्गवृषः-** यः वृषभः पुच्छखुरेषु पिङ्गः । अन्यत्र सर्वाङ्गेषु एकवर्णस्तादृशः वृषभः 'नीलपिङ्गवृषभः' इत्युच्यते ।

४. **बभ्रुनीलवृषः-** यो बृषभः पारावतसवर्णः तिलकभूषित-ललाटस्तादृशो वृषभः 'बभ्रुनीलवृषभः' इत्युच्यते ।

५. **महानीलवृषः-** यश्च वृषभः सर्वाङ्गे नीलः, नयनद्वये रक्तश्च तादृशः वृषभः 'महानीलवृषभः' इति कथ्यते । उक्तं चैतत् सर्वं गरुडपुराणे प्रेतकाण्डे-

'एकादशेऽह्नि विधिना वृषोत्सर्गं समाचरेत् ।
हीनाङ्गं रोगिणं बालं त्यक्त्वा कुर्यात् सलक्षणम् ।
रक्ताक्षः पिङ्गलो यस्तु रक्तः शृङ्गे गले खुरे ।
श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य विधीयते ।
सुस्निग्धवर्णो यो रक्तः क्षत्रियस्य विधीयते ।
पीतवर्णश्च वैश्यस्य कृष्णः शूद्रस्य शस्यते ॥
यस्तु सर्वाङ्गपिङ्गः स्यात् श्वेतः पुच्छे पदेषु च ।
स पिङ्गो वृष इत्याहुः पितॄणां प्रीतिवर्धनः ।
चरणास्तु मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णो यः स नील इति कीर्तितः ।
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
पिङ्गः खुरविषाणाभ्यां रक्तनीलो निगद्यते ।
सर्वाङ्गेष्वेकवर्णो यः पिङ्गः पुच्छे खुरेषु च ॥
तं नीलपिङ्गमित्याहुः पूर्वजोद्धारकारकम् ।
पारावतसवर्णस्तु ललाटे तिलकान्वितः ।
तं बभ्रुनीलमित्याहुः पूर्णं सर्वाङ्गशोभनम् ।
नीलः सर्वशरीरेषु रक्तश्च नयनद्वये ।
तमप्याहुर्महानीलं नीलः पञ्चविधः स्मृतः ॥' इति ।

(गरुडपुराणम् - प्रेतकाण्डः, अ-१२, श्लो.२१-२९)

## गोदानं मुक्तनिदानम्

गोदानात् परं दानं जगति नास्तीति वेदेतिहासपुराणग्रन्थेभ्यः वयं प्रतीमः । गोदानं मुक्तिनिदानमिति च वयं तत्र तत्र ग्रन्थेषु श्रुणुमः । परन्तु गोदानं न साक्षान्मुक्तिकारणं किन्तु ज्ञानद्वारैव ।

श्रीमन्मध्वाचार्याणां शैशवावस्थायां घटिता एका घटना प्रसङ्गेऽस्मिन् उल्लेखमर्हतीति मन्ये । भगवदाज्ञप्तस्त्रैलोक्यगुरुः मुख्यप्राणः मध्य-गेहाख्यद्विजस्य पुत्रत्वेनावततार । तदा मूडिल्लायाख्यः द्विजः 'शिशुरयं क्षीरं सम्यक् पिबतु' इत्याशयेन मध्यगेहाय गामदात् । तच्च गोदानं मूडिल्लायकर्तृकं झटिति शुभफलकार्यभूत् । गोप्रदानेऽस्य शिशोरुत्तम-पात्रत्वाद् गोप्रदः मूडिल्लायः क्षिप्रं स्वपुत्रपुत्रत्वेन प्रजातः श्रीमध्वशिष्यो भूत्वा परमात्मतत्त्वं ज्ञात्वा क्रमेण मुक्तोऽभूत् । नेदमाश्चर्यावहम् । अत एवोक्तं मध्वविजये नारायणपण्डिताचार्येण- **'दानं ध्रुवं फलति पात्रगुणानुकूल्यात्'**(म.वि.२.३०) इति । सत्पात्रे सभक्तिश्रद्धं कृतं गोदानं ज्ञानद्वारा मुक्तिकारणं भवतीत्यंशं द्रढयतीयं कथा ।

एवं त्रेतायां श्रीरामः वनगमनसमये त्रिजटाख्यब्राह्मणाय गाः अदादिति रामायणे श्रूयते । एवं द्वापरे भूभारपरिहाराय यदा हरिः श्रीकृष्णरूपेण भुवि प्रादुरभूत् तदा वसुदेवः कृष्णावतारोत्सवसम्भ्रमेण ब्राह्मणेभ्यः दशसहस्रसङ्ख्याकाः गारदात् । तच्चोक्तं भागवते दशमस्कन्धे-

**'कृष्णावतारोत्सवसम्भ्रमोऽस्पृशन् ।**
**मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥'** इति ।

(भागवतम्- १०.४.११)

एवं नन्दगोकुले नन्दगोपोऽपि कृष्णजननसम्भ्रमेण पूर्णमनाः सन् विप्रेभ्यः लक्षसङ्ख्याकाः गारदात् । तथा चोक्तं भागवते-

**'धेनूनां नियुते प्रादात् विप्रेभ्यः समलङ्कृते ॥'** इति ।

(भागवतम्- १०.६.३)

## गोविन्दस्य गोप्रीतिः

भगवान् श्रीकृष्णः बाल्ये कदाचिन्मातरं यशोदां प्रत्येवं कथयति । मातः ! पूर्वं त्रेतायामहं चक्रवर्त्यासम् । तदाऽसीन्मम नाम रामेति । तज्जन्मनि मया यथाशक्ति गोसेवा-गोसंरक्षणगोदानादिकं यद्यपि कृतम् । तथाऽपि तज्जन्मनि मम चक्रवर्तित्वाद् गोसामीप्य-साङ्गत्य-साहचर्यादिकं विशेषतो मया नान्वभावि । अत एव एतज्जन्मनि गोसामीप्य-साङ्गत्यादिसुखं गाः चारयन् गोपालको भूत्वाऽनुभवन्नस्मि' इति । बालमुकुन्दोऽनेन मानवानां जीवने गोसाङ्गत्यसाहचर्यादिकम् अत्यमूल्यमवश्यमपेक्षणीयं चेति ज्ञापयति ।

श्रीकृष्णः प्रतिदिनं, विना पादरक्षां गाः चारयन् गिरिकानन-वनश्रेणिषु सञ्चरति स्म । एकदा यशोदा वदति । कृष्ण ! 'पादरक्षां धृत्वा वने सञ्चर, यया तव कोमलपादयोः कण्टकादिबाधा न स्यात्' इति । तदा श्रीकृष्णः कथयति - तर्हि सर्वाः गावः गोवत्साश्च पादरक्षां स्वीकुर्वन्तु । इति । एतदशक्यमिति मत्वा यशोदा तूष्णीम्बभूव । ततः पश्चात् श्रीकृष्णः स्वस्य गोषु विद्यमानां महतीं प्रीतिं प्रकाशयन् ताभिः साकं विनैव पादरक्षां वने सञ्चचार ।

## गोदानफलम्

सत्पात्रे ब्राह्मणे, समुचितकाले, शास्त्रविधिमनुसृत्य दत्तं गोदानं शुभं फलं जनयति नान्यत् । सहस्रगोदानकर्ता नाकमेव गच्छति न नरकम् । गोदानकृत् अमृतदानफलभाग् भवति यतः देवेन्द्रेण गोक्षीरममृतमित्येव भणितम् । गोदानकर्ता पवित्रहविर्दानफलभाग् भवति । यतो गोघृत-रूपहविरेवाग्नौ हूयते । एवं गोपतिः वृषभस्तावत् रूपान्तरमापन्नो नाक

एव । अतः योग्यब्राह्मणाय वृषभदाता नाकलोके सम्मानितो भवति । गावः स्वक्षीरद्वारा सर्वान् प्राणिनः रक्षन्ति । अत एव ताः प्राणिनां प्राणा इति कथ्यन्ते । तस्माद् गोदातारः प्राणदातारश्च भवन्ति । गावः सकलप्राणिनामाश्रयभूता इति वेदविदः प्राहुः । तस्माद् गोदातारः आश्रयदातारश्च भवन्ति । अयुतसहस्रगोदानकर्ता मरणानन्तरमिन्द्र-लोके देवेन्द्रेण सह महीयते ।

पित्रार्जितेन वा धर्मार्जितेन वा वित्तेन वा गां सम्पाद्य सत्पात्रे यो प्रतिपादयति सः अक्षयान् पुण्यलोकान् लभते । सभक्तिश्रद्धं गोदान-कर्ता जितेन्द्रियक्षमाशीलाभ्यां प्राप्यां गतिं लभते । राजसूययागेन यत् फलं, बहुसुवर्णव्ययं कृत्वा यज्ञकरणेन च यत् पुण्यं तदनायासेन नित्यं गोदानमनुतिष्ठता पुरुषेण लभ्यते ।

एकवर्षपर्यन्तमाहारस्वीकरणात् पूर्वमनुदिनं परगवे घासमुष्टिप्रदानं घासमुष्टिव्रतमित्युच्यते । एतद्व्रतकर्तुः वैयुक्तिकाः सामूहिकाश्च मनोरथाः पूर्यन्ते । स सर्वाण्यशुभानि व्यपोहति ।

**घासमुष्टिं परगवे दद्यात् संवत्सरं तु यः ।**
**अकृत्वा स्वयमाहारं व्रतं तत् सर्वकामिकम् ॥**

सवत्सकपिलागोदानकर्ता ब्रह्मलोकं, रक्तवर्णोपेतगोदाता सूर्य-लोकं, मिश्रवर्णोपेतधेनुदाता चन्द्रलोकं, श्वेतवर्णोपेतगोदाता इन्द्र-लोकं, कृष्णवर्णगोदाताऽग्निलोकं, धूम्रवर्णोपतगोप्रदाता यमलोकं, जलफेनवर्णोपेतगोदाता वरुणलोकं, शबलगोदाता वायुलोकं, पिङ्गल-नेत्रां सुवर्णवर्णां गां यो ददाति स कुबेरलोकं, प्रज्वलत्तृणधूमसमान-वर्णोपेतगोदाता पितृलोकं च प्राप्नोति । एवं सत्पात्राय वृषभदाता,

मरुतां गन्धर्वाप्सरसां प्रजापतेः लोकं प्राप्नोति । लक्षगोदाता स्वर्गं लभते कुलद्वयं(पितृ-मातृकुलं) च पावयति ।

**गोदानयोग्याः पुरुषाः**

येऽधीतवेदादिशास्त्राः अधिकतपस्विनः यज्ञानुष्ठाने निरतास्ते गोदानार्हा भवन्ति । गवां विषये येऽत्यन्तं कृपालवः क्षमाशीलाः, गोरक्षणे समर्था कृतज्ञाः जीवनोपायरहिताश्च ते गोदाने सत्पात्राणि भवन्ति । एवं वृद्धः, रोगार्तः सन् पथ्यभोजनमभिलषत् पुरुषः, दुर्भिक्षादिभिः भीतः, यज्ञचिकीर्षुश्च पुरुषः गोदानार्हो भवति । यज्ञार्थं, पुत्रपोषणार्थं, गुरुदक्षिणार्थं वा यो गामभिलषति सोऽपि गोदानयोग्यो भवति ।

**गोदानायोग्याः पुरुषाः**

गोर्हिंसकाय, कृषिकाय, नास्तिकाय, गोवृत्तिमते च गौर्न दातव्या । तादृशपापकर्मिणे गोदाता नरके पतति । दुराचारिणः, पापिष्ठाः लोभिनोऽनृतवक्तारः, वैश्वदेव-श्राद्धकर्माद्यकर्तारश्च गोदानायोग्या भवन्ति । गोहन्तॄणां गोदातारः यावद्गोरोमाः तावत्पर्यन्तं नरके दुःखभाग् भवन्ति ।

**दानानर्हा गावः**

कृशाः गावः, वत्सहीना गावः, वन्ध्या गावः, रुक्पीडिताः, अङ्गविकलाः, वार्धक्यजर्झरिताश्च गावः, ब्राह्मणाय न दातव्याः । एतादृश्यः कृशा गावः ब्राह्मणाय दातुं प्रवृत्तः नचिकेतपिता पुत्रेण नचिकेतेनाऽऽक्षिप्त इति काठकोपनिषदि कथा श्रूयते । तस्मादुत्तमा गावः समुचितकाले द्विजोत्तमाय दातव्या इति ज्ञेयम् ।

## विश्वस्य गावो मातरः

सप्तमातृषु गौरप्यन्तर्भवति । १. जननी २. गुरुपत्नी ३.विप्रपत्नी ४.राजपत्नी ५.गोमाता ६. धात्री ७. पृथिवी तथाचोक्तां चाणक्येन-

**'आदौ माता गुरुपत्नी ब्राह्मणी राजपत्निका ।**
**धेनुर्धात्री तथा पृथ्वी सप्तैता मातरः स्मृताः ॥'** इति ।

तथा च मातृस्थानीयाः सर्वेषामेता गावः पञ्चगव्यार्थं पञ्चामृतार्थं च प्रपञ्चे विरिञ्च-वैरिञ्चादिभिरमरैः सर्वैर्नरैश्चापेक्षिता एव । एतादृगवां रक्षणेऽस्माभिः भारतीयैः कटिबद्धैर्भाव्यम् । परमपूज्याः **श्रीरामचन्द्रापुर-मठाधीशाः** तथाऽस्मद्गुरुचरणाः **श्रीविश्वेतीर्थश्रीमच्चरणाः** तेषां शिष्याः **श्रीविश्वप्रसन्नतीर्थाश्च** गोकेन्द्रनिर्माणद्वारा गोरक्षणे बद्धदीक्षाः सन्ति । गोरक्षणं बहुवित्तव्ययसाध्यं, गोरक्षणेन कृषिकानां जीवनेऽभ्युदय-लेशोऽप्यधुना न दृश्यत इति आधुनिकानां कथनं तु सत्यादपेतमित्यलं पल्लवितेन ।

**परामृष्टाः ग्रन्थाः**

१. भारतदर्शनविशेषाङ्क (कन्नड)
२. महाभारतम्
३. गरुडपुराणम्
४. भारतीयसंस्कृतियल्लि गोवु (कन्नड)
५. वाल्मीकिरामायणम्

******

